ननु 'तत्केन कं विजानीयात्' ( बृ० ४ । ५ । १५ ) 'न तु तद्द्वितीयमस्ति' ( बृ० ४ । ३ । ३० इत्यादिश्रुत्या विदुषो द्वैतादृष्टिबोधनात्कथमैश्वर्यभोगस्तत्राऽऽह—

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥(६) इति ।

उक्तवाक्यं स्वाप्ययस्य सुषुप्तेः संपत्तेः कैवल्यस्य चान्यतरदपेक्ष्य द्वैतादृष्टिबोधकं हि यस्मात् 'यत्र त्वस्य सर्वमात्मैवाभूत्' ( बृ० २ । ४ । १४ ) इत्यनेन 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' ( बृ० ४ । ३ । १९ ) इत्यनेन च समभिव्याहृतवाक्येन तथाऽऽविष्कृतं व्यक्तीकृतम् ॥ १६ ॥ ( ६ )

जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥ इति ।

सगुणविद ऐश्वर्यं जगत्सृष्ट्यादिव्यापारवर्जं तदन्यविषयकजगत्सृष्ट्यादिबोधकश्रुतिष्वीश्वरस्य नित्यसिद्धस्यैव प्रकृतत्वात्प्रलयानन्तरं स्रष्टुरेव स्थित्यादिकर्तृत्वनिर्देशात्सृष्ट्यारम्भकाले चाऽऽधुनिकानामुपासकानामसंनिधानात्कल्पान्तरोपासकानां च प्रलय एव सह ब्रह्मणा मुक्तत्वात् ॥ १७ ॥

प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ इति ।

'आप्नोति स्वाराज्यम्' [ तै० १ । ६ । २ ] 'सर्वेऽस्मै देवा बलिमावहन्ति' [ तै० १ । ५ । ३ ] इत्यादिप्रत्यक्षोपदेशाज्जगत्सृष्ट्यादावपि विदुष ऐश्वर्यमिति चेन्न । 'आप्नोति मनसस्पतिं वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवति' [ तै० १ । ६ । २ ] इत्यनन्तरवाक्येनाऽऽधिकारिकस्य सवितृमण्डलादिस्थस्य पूर्वसिद्धेश्वरस्य मनस्पतिशब्दितस्य वाक्पतित्वाद्यैश्वर्यमात्रलाभार्थं विद्वत्प्राप्यत्वेनोक्तेः । आप्नोति स्वाराज्यमित्यादेश्च सर्वदेवतापूज्यत्वादिबोधकत्वेऽपि जगत्सृष्ट्यादिसामर्थ्ये मानाभावात् ॥ १८ ॥

विकारावर्ति च तथा हि स्थितिमाह ॥१९॥ इति ।

विकारावर्ति निर्गुणं ब्रह्म सगुणोपासकेनाप्राप्यं सत्तथा तादृशीमेव स्थितिं मर्यादामाह द्योतयति । यथा सगुणस्यैव वस्तुतो निर्गुणस्योपा

---

१ क. °त्तेः कै° । २ ख. °स्तुतो नि° । ३ क. °एत्वेऽ° ।

सनाविषयगोचरत्वेनोपास्यत्वेऽपि सगुणविदो न नैर्गुण्यप्राप्तिरतत्क्रतुत्वा-त्तथा सगुणे जगत्कर्तृत्वादिगुणस्य सत्त्वेऽपि नोपासकस्य तत्प्राप्तिस्तादृ-शगुणस्योपासनाविषयगोचरत्वेनोपासकक्रत्वविषयत्वात् ॥ १९ ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ इति ।

प्रत्यक्षं 'तं यथायथोपासते तदेव भवन्ति' इतिश्रुतिः । अनु-मानं ।

यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।

तं तमेवैति कौन्तेय सदा तद्भावभावितः [ भ० गी० ८ । ६ ] इति स्मृतिश्चैवमुपासनाविषयगुणस्यैवाऽऽप्तिं दर्शयतः ॥ २० ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ इति ।

'यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्य-वन्ति' 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' [ बृ० १ । ५ । २३ ] इत्यादिलिङ्गादपि सगुणविदो भोगमात्रेण सगुणसाम्यं लभ्यते न तु जगत्कर्तृत्वादिकं सायुज्यशब्देन तादात्म्यमात्रस्य सलोक-ताशब्देन तत्समानभोगमात्रस्य लाभात् । अन्यथा सर्वलोकाभिमानि-देवतातादात्म्यापन्नस्य तत्समानलोकत्वोक्तिवैयर्थ्यादिति भावः ॥ २१ ॥

ननु ब्रह्मलोकादावेवोपासनाफलस्य भुक्तत्वादन्यकर्ममात्रस्य च विद्ययैव पूर्वं दग्धत्वाद्विदुषः पुनरस्मिँल्लोके परावृत्त्यनुपपत्तिः । न च श्रुत्यैवाऽऽवृत्तिं निषिध्यामृतत्वमुक्तमतोऽनावृत्तिरेव तस्येति वाच्यम् । 'इमं मानवमावर्तं नाऽऽवर्तन्ते' 'तेषामिह न पुनरावृत्तिः' इत्यादि-श्रुतिष्विममितीहेतिशब्दाभ्यां कल्पान्तर आवृत्तिलाभात् । अत एवामृ-तत्वमपि श्रौतं गौणमेवेत्यत आह—

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ (७) इति ।

विदुषः कल्पान्तरेऽप्यनावृत्तिरेव 'न स पुनरावर्तते' [ छा० ८ । १५ । १ ] इतिसामान्यमुखाच्छब्दाच्छ्रुतेः । इहेत्यस्य संसारमात्रार्थत्वे बाधकाभावादत एवेममित्यस्यापीदंजातीयार्थत्वाद्वर्तमानकल्पार्थक-त्वेऽपि प्रतिकल्पवर्तिपुरुषान्प्रति वर्तमानकल्पबोधकत्वेन कल्पमात्रेऽ-नावृत्तिलाभात् ।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इत्यादिस्मृत्या वर्तमानकल्पान्ते विदुषां कैवल्यबोधनेन तेषामनावृत्त्यावश्यकत्वाच्च । 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' [ भ० गी० ८ । १६ ] इत्यादेरप्यश्वमेधादिना प्राप्तलोकाविद्वत्परत्वाच्चेति शिवम् ॥ २२ ॥ ( ७ )

इति चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

इति श्रीपरमहंसपरिव्राजकपरमानन्दसरस्वतीपूज्यपादशिष्य-
ब्रह्मानन्दसरस्वतीविरचितवेदान्तसूत्रमुक्तावल्यां
चतुर्थोऽध्यायः समाप्तः ।

---

समाप्तेयं ब्रह्मानन्दसरस्वतीविरचिता
वेदान्तसूत्रमुक्तावलिः